जनस्थाने भ्रान्तं कनकमृगतृष्णान्वितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृतालङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाऽऽप्तं रामत्वं कुशलवसुता न त्वधिगता(A) ॥ १२४ ॥

---

वाच्यव्यङ्ग्ययोर्वा अङ्गाङ्गिभावसत्त्वे तत्सङ्करस्तदसत्त्वे संसृष्टिः, अङ्गिमात्रस्य चमत्कारित्वे तु शुद्धध्वनिः,[1] अङ्गमात्रस्य चमत्कारित्वे तु अपराङ्गमिति विषयविभागः ।

इत्थं रसाद्यङ्गं रसादिकमुदाहृत्य वाक्यार्थस्याङ्गेऽनुरणनरूपे उदाहर्त्तव्ये वाच्यालङ्कारस्याङ्गं शब्दशक्तिमूलमनुरणनरूपमलङ्कारमाह—**जनस्थान** इति । दरिद्रस्योक्तिरियम् । तुल्यशब्दवाच्यतारूपसाधर्म्यात् मया रामस्य भ्रान्त राम इवाहं जात इत्यर्थः । तुल्यशब्दवाच्यत्वरूपं साधर्म्यमाह—जनस्थान इति । कनकमयमृगस्य तृष्णया प्राप्तीच्छया अन्वितधिया रामेण जनस्थाननाम्नि दण्डकारण्यैकदेशे भ्रान्तं मया तु जनानां स्थाने कनकरूपया मृगतृष्णया मरीचिकया अन्वितधिया भ्रान्तम्, (B)कनके मृगतृष्णात्वरूपाङ्ग

---

(A) जनेति । व्याख्यातमिदमुद्द्योतकारैः—कस्यचित् राजसेवानिर्विण्णस्य कवेरुक्तिः । मया रामत्वं रामधर्मः, तत् प्राप्तम्, कुशलं परिणामसुन्दरम् उद्वेगनिरासनिपुणं वा वसु धनं यस्य तद्भावः कुशलवसुता सैव कुशलवौ सुतौ यस्या इति व्युत्पत्त्या सीता सा तु नाधिगता । रामत्वं कथं प्राप्तं तदाह—कनकस्य मृगो मार्गणं प्रार्थना वा तत्र या तृष्णा कनके वा या मृगतृष्णा निष्फलाऽऽशा सैव कनकमृगो मारीचे तृष्णा तया अन्विता धीर्यस्य तादृशेन मयेत्यर्थः । यद्वा अन्वितधिया कारण-(भूत)या जनानां स्थाने ग्रामनगरादौ भ्रमणमेव दण्डकारण्ये भ्रमणम्, तत् कृतम् । वै निश्चयेन देहीति वचनमेव वैदेहीति सीतासम्बोधनवचनम्, तत् प्रतिपदं प्रतिस्थानम् उद्गतमश्रु यत्र तद् यथा भवति तथा प्रलपितम् । भर्तुः भरणकर्तुर्धनिकस्य परिपाटीषु सेवावसरेषु अलमत्यर्थं का घटना न कृता वद । अथवा कामर्तुं कुत्सितभर्तुं वदनपरिपाटीषु मिथ्याभाषणप्रकारेषु घटना उपपत्तिः, वदनपरिपाटीषु मुखविकासनादिषु तदाशयानुसरणार्थं घटना उपायो वा, स एव लङ्कायाः राक्षसस्य वदनपरिपाट्याः (मुख)पङ्क्त्यामिषुघटना अलमत्यर्थं कृतेति श्लेषोपस्थापितानामभेदारोपाद् रामत्वोपपत्तिरिति ।

(B) रामतर्कवागीशास्तु—'केचित्तु' इत्यनेन कनकइत्यादिसाधर्म्यादित्यन्तं ग्रन्थमुद्धृत्य तत्र 'तन्न, स्वरूपमतः कनकस्य बुद्धिन्धीकरणासम्भवात् तत्प्राप्तीच्छाया लक्षणाऽवश्यमङ्गीकार्या,

---

1 अत्र पर ह पुस्तके 'चमत्कारित्वे तु तत्र सङ्कीर्णव्यभिचारिभावरूपतया वर्त्तमानत्वमात्रम्' इत्यंशोऽधिको दृश्यते ।

अत्र 'शब्दशक्तिमूलानुरणनरूपो रामेण सहोपमानोपमेयभावो वाच्याङ्गतां नीतः ।

---

दुष्प्राप[1]जलार्थिनो मृगतृष्णायामिव दुष्प्रापे कनकेऽपि प्रवृत्तेर्मन्दादृष्टप्रवृत्तिविषयत्व-साधर्म्यात्[2]* । रामेण प्रतिपद् पदे पदे[3] उदश्रु यथा स्यात् तथा वैदेहीति यत् प्रलपितम् , मया तु वै इत्यनेन सम्बोध्य कातर्यादुदश्रु यथा स्यात् तथा देहीति यत् प्रतिपदं प्रतिस्थाने प्रलपितम् । रामेण लङ्काभर्तुं रावणस्य वदनानां मुखानां परिपाट्यां पङ्क्तौ परिपातननिमित्तं या इषुघटना(A) कृता, मया तु भर्तुः प्रभोः परिपाटीषु परिचर्यानिमित्त का घटना अल्पम् अन्यथं न कृता तत्तु यत् ; कुमालं वारिद्याप-नायक [illegible] धन यस्य तथाता मया तु नाधिगता, रामेण तु कुशलवौ सुतौ यस्याः सा सीता प्राप्तैव इति तु शब्दलभ्योऽर्थः । अत्रेति । 'उपमानोपमेयभाव' उपमा, रामत्व-प्राप्तिव्यङ्ग्या , 'वाच्याङ्गता' 'वाच्यस्य व्यतिरेकालङ्कारस्य'[4]* (B)अङ्गतां प्रकर्षकताम् कविना नीत इत्यर्थः । व्यतिरेकालङ्कारोऽत्र अप्राप्तकुशलवसुताकस्य उपमेयस्य दरिद्रस्य प्राप्तकुशलवसुताकात् रामादुपमानाद् आधिक्यरूपो यथा वाच्य', आधिक्यञ्च प्रतिपाद्यस्य विपादस्याधिक्यात(C) । उपमानोपमेयभाव इत्युपलक्षणम्, रामरूपकमपि

---

पृथक् तत्र निरुक्तसाधर्म्यासम्भवाद् रूपकासङ्गते'रिति दूषणमाह । अत्र तत्सम्मत व्याख्यानन्तु—'कनकस्य मृगतृष्णास्थामन्वेषणप्रातीच्छाम्यामन्वितधिये'ति ।

(A) लङ्काभर्तुं रावणस्य वदनपरिपाटिनी कण्ठच्छेदिनी इषुघटना इति कर्मधारयोऽपि सम्भवतीति बोध्यम् ।

(B) अत्र दर्पणकारा —'अत्र रामत्वं प्राप्तमित्यवचनेऽपि शब्दशक्त्यैव रामत्वमवगम्यते, वचनेन तु सादृश्यहेतुकतादात्म्यारोपणमाविष्कुर्वता व्यङ्ग्यगोपनमपाकृतम् ; तेन वाच्यं सादृश्यं वाक्यार्थान्वयोपपादकतया अङ्गतां नीत'मिति वदन्ति ।

प्रदीपकारास्तु—वाच्याङ्गमात्रेण शब्दशक्तिमूलस्य लक्ष्यक्रमस्य गुणीभावे श्लोकमिममुदाहृत्य 'अत्र पादत्रयद्योत्याऽपि रामेण सहोपमा 'मयाऽऽप्तं रामत्व'मित्यनेन वाच्यतां नीता, तदङ्गं च शब्दशक्तिमूलानुरणनरूपो द्वितीयोऽर्थः ' इत्युपपादयन्ति ।

(C) विपादस्याधिक्यादिति । 'उपमानाद् यतोऽन्यस्ये'त्युक्तवता दर्पणकृतां मते तु अत्र उपमेयस्य दरिद्रस्य प्राप्तकुशलवसुताकाद् रामादप्राप्तकुशलवसुताकत्वरूपन्यूनत्वोक्त्या द्वितीयो व्यतिरेकभेदः सातु सङ्गच्छते इति बोध्यम् ।

---

1 'शब्दशक्तिमूलोऽनु-' इति पाठान्तरम् । 2 '-र्थिनं कनके च मृगतृष्णिकामलविषयत्व-रूपसादृश्यात्' ख । 3 पंत पर ख-पुस्तके 'स्थाने स्थाने' इत्यधिक दृश्यते । 4 'वाच्यस्य कुशलवसुताऽप्राप्तानां प्राप्ततत्कात् रामाद्व्यतिरेकरूपालङ्कारस्य' क ।

 

आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गी-
मम्भोजिनीं क्वचिदपि क्षपितत्रियामः ।
एतां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि पादपतनेन सहस्ररश्मिः(A) ॥ १२९ ॥

अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो निरपेक्षरविकमलिनीवृत्तान्ताध्यारोपेणैव स्थितः ।

---

तादृशं वाच्यम् । यद्यपि उपमानोपमेयभावो व्यतिरेकालङ्कारद्वारेण निर्वाहक एव तथाऽपि बहुविशेषणनिर्वाहेण सति वैचित्र्याधिक्यात् प्रकारकाऽपीन्यथा ध्येयम् ।

[1]अर्थशक्त्युद्भवमनुरणनरूपमलङ्कारमपि वाच्याङ्गमाह[1]*—आगत्येति । प्रातः मानिनीं प्रति नायकस्योक्तिरियम् । हे तन्वङ्गि, सहस्ररश्मिः सूर्यः सम्प्रति आगत्य एतामम्भोजिनीं पादेन रश्मिना पतनेन प्रभाते शनैः प्रसादयति एतत् पश्य । कीदृशः ? क्वचिदपि द्वीपान्तरे क्षपितरात्रिकः । अम्भोजिनीं कीदृशीम् ? सूर्यवियोगेन विसंष्ठुलाङ्गीं व्याकुलाङ्गीम्, अद्भुतमेतत् पश्यमेव । (B)अत्रेति, नायकेऽन्यत्र प्रकृतेऽर नायिकानायकवृत्तान्त इत्यर्थः । स च क्वचिदपि नायिकागृहे क्षपितरात्रिका नायकः प्रातरागत्य वियोगविसंष्ठुलाङ्गीं नायिकां पादपतनेन शनैः प्रसादयतीत्येवंरूपः । वस्तुरूप इति । [2]समासोक्तिरूपस्यास्य वस्तुत्वानपायादित्युक्तम्,

---

(A) आगत्येति । अत्रोक्तं बालबोधिन्याम्—'विनैवानुनयमपगतमाना नायिका सख्या उपालभ्यते । तथाहि—सहस्ररश्मिरित्यनेन बहुनायिकावत्त्वं ध्वन्यते । अम्भोजिनीमित्यनेन वर्ण्यायाः पद्मिनीत्वम्, क्वचिदपि इत्यनेन उपनायिकागृहे एतेन निशायापनं, तत्रापि यामत्रयमेव न त्वधिकमिति । एवञ्च ईदृशोऽपि ईदृशीं स्वयमेवागत्य पादपतनेनानुनयति, ईदृशो हि कामिनो व्यवहारः, त्वं पुनर्बहुतरकालं परनायिकासङ्गे धूर्त विनैवानुनयं मानं त्यक्त्वा प्रसन्नाऽसीत्युपालम्भः । एवञ्च नायकनायिकावृत्तान्तकथनमेवाभिप्रेतम् । स च वृत्तान्तो व्यङ्ग्यमानो वाच्यं रविकमलिनीवृत्तान्तेऽभिन्नतया आरोप्यमाणस्तस्य प्रकृतार्थतां सम्पादयन् तदुत्कर्षमाधत्त इत्यङ्गतयैवास्ते । अयमेव समासोक्त्यलङ्कार इत्युद्द्योतादौ स्पष्टम्' इति ।

(B) अत्र प्रदीपकाराणामुपरान्तप्रकारस्तु—'अत्रार्थशक्तिमूलो नायकनायिकावृत्तान्तो

---

1 अर्थशक्तिमूलाद्ध्वनेरुदाहरणं व्यङ्ग्यमप्रस्तुतप्रशंसालङ्कारे वाक्यार्थीभूतवस्तुनोऽङ्गमाह च । 2 एव वस्त्वलङ्कारयोर्भेदकथनानुपपत्तेरलङ्कारस्यापि वस्तुत्वानपायात् समासोक्त्यलङ्काररूपं इत्यादि अप्रकृतकथनेन प्रकृतस्य व्यञ्जनात् समासोक्तित्वात् च ।

वाच्यसिद्ध्यङ्गं यथा—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणञ्च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥१२६॥

अत्र हालाहलं व्यङ्ग्यं भुजगरूपस्य वाच्यस्य सिद्धिकृत् ।

---

अवस्तुरूप इत्येवम् अकारप्रश्लेषो वा'*। निरपेक्षेति नायकवृत्तान्तरूपव्यङ्ग्यनिरपेक्ष इत्यर्थः, तद्व्यय विनैव वाच्य-रविकमलिनीवृत्तान्तप्रतीते । अनेन व्यङ्ग्यप्रतीतिसापेक्ष-वाच्यप्रतीतेर्वक्ष्यमाणवाच्यसिद्ध्यङ्गाद्व्यवच्छेदः कृत । अध्यारोपेणेति रवि-कमलिनीवृत्तान्त एव नायक इत्येवमध्यारोपेण स्थित इत्यर्थः । रविकमलिनीवृत्ता-न्तस्य मानिन्यां प्रदर्शनानुपयोगेन नायकवृत्तान्तारोपेणैव तदुपयुक्तारूप प्रकर्ष इत्यतोऽङ्गमित्यर्थः । अगूढे वाच्यतुल्यचमत्कारित्वेन अपराङ्गे तु स्वचमत्कारस्य परार्थतया वाच्यादनतिशयो बोध्यः।

(१) वाच्यसिद्ध्यङ्गमाह—वाच्यसिद्धीति । 'आपाततः प्रतीतस्य वाच्यार्थस्य प्रतिसन्धीयमानानुपपत्तिनिरासकं व्यङ्ग्यं वाच्यसिद्ध्यङ्गम्'[1]*। भ्रमिमिति । भ्र-कारकत्वेन श्यामत्वेन च जलद एव भुजग, तज्जन्य प्राकरणिक जलमेव विषम्, 'विषमप्सु च' इत्यमरकोषात् । तच्च जलं वियोगिनीनां भ्रम्यादिकं करोतीत्यर्थः वृष्टिजलस्य वियोगोद्दीपकत्वात् । प्रलय नष्टचेष्टताम् । तम' चक्षुषि तिमिरम् । अत्रेति(A), अनेकार्थस्य विषशब्दस्य प्रकरणेन जले वाचकत्वे नियमनात् हालाहल

---

वाच्यरविकमलिनीवृत्तान्ताध्यारोपेण तदङ्गतयैव स्थित , समासोक्तौ 'उपोढरागेण विलोल' इत्यादौ सर्वत्र प्रतीयमानार्थोपस्कृतवाच्यस्यैव प्राधान्यात् । अयं च पदद्वयनेनेति श्लिष्टशब्द-सद्भावेऽपि न 'शब्दशक्तिमूलत्वेन व्यपदेश किन्त्वर्थशक्तिमूलत्वेन, प्राधान्येन व्यपदेशा इति न्यायात् । तद्व्यतिरेकेणापि नायकनायिकावृत्तान्तस्याभिव्यक्तिसम्भवात् । न चोपमाऽत्र व्यङ्ग्या 'उद्दाल्य काल-' इत्यादिवत् श्लेषाभावात् । न च वाच्यसिद्ध्यङ्गत्वम्, रविकमलिनीवृत्तान्तस्यै-तन्नैरपेक्ष्येणैव सिद्धे ' इति ।

(A) अत्र प्रदीपकाराणां वाच्यसिद्ध्यङ्गत्वोपपादनप्रकारस्तु—अत्र हालाहलरूपो विषशब्दार्थो व्यङ्ग्य , जलेऽभिधानियमनात् , स च जलदभुजगोऽति रूपणस्य वाच्यस्य सिद्धिं करोति, अन्यथो-पमासन्देहसम्भवात्' इति । तथा चन्द्रिकाकारा अपि—अत्र अप्रकृतत्वेन व्यङ्ग्यं हालाहलं जलद-भुजगेति रूपकस्य वाच्यस्य सिद्धिकृत्, अन्यथा जलदस्य भुजगत्वायोगेन भुजग इव जलद

---

1. 'प्रथम अनिवार्यत्वबोधस्य वाक्यस्यार्थे पश्चादनुपपद्यमानतायां वाच्यानुपपत्तिनिरासक यत्तदेव व्यङ्ग्य तद् वाच्यसिद्ध्यङ्गम्, वाच्यमप्रधानं वाच्यमपि तत्र्यमकम्' च।

यथा वा—

गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किं त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा ।

---

व्यङ्ग्यमेव, तत्र आपाततः प्रतीयमानस्यापि जलदे भुजगरूपणस्य वाच्यस्य प्रतिसन्धीयमानानुपपत्तिनिरासकत्वात्। तथाहि '¹प्राकरणिकतया विषशब्दवाच्यजले भुजगजन्यत्वबाधेन भुजगरूपणस्य वाच्यस्य प्रतिसन्धीयमानानुपपत्तिः, जले हालाहलरूपणेन व्यङ्ग्येन तु तदनुपपत्तिनिरसनात् तत्सिद्धि (A), हालाहलस्य भुजगजन्यत्वेनानुपपत्त्यभावात्। न च 'विद्वन्मानसहंसे'त्यत्र यथा मनसि मानससरोवररूपणं राज्ञि हंसरूपणसिद्धिकृत्त्वेन परम्परितरूपकं तद्वत्रापि जले हालाहलरूपणस्य भुजगरूपणसिद्धिकारित्वेन परम्परितरूपकत्वं स्यादिति वाच्यं तत्रोपायभूतरूपकस्यापि प्राकरणिकत्वेन वाच्यत्वम्, अत्र तु अप्राकरणिकत्वात् व्यङ्ग्यत्वमिति भेदात्'*।

उदाहरणान्तरप्रदर्शनबीजं स्वयमेव प्रदर्शयिष्यन्नाह—यथा वेति। गच्छामीति।

---

इति पूर्वपदार्थप्रधानोपमितसमासाश्रयणेनोपमालङ्कारपक्षे, व्यङ्ग्याभिन्नत्वेनाध्यवसिते तु जले भुजगत्वोपपत्तेरुत्तरपदार्थप्रधानरूपकसिद्धि' इति वदन्ति।

(A) तत्सिद्धिरिति वाच्यसिद्ध्यङ्गत्वसिद्धिरित्यर्थः।

---

1 'जले व्यञ्जनया [illegible] हालाहल [illegible] भुजगजन्यत्वबाधेन जलदे भुजगरूपण एव प्रतिसन्धीयमानाया अनुपपत्तेर्व्यञ्जनया हालाहलरूपणेनैव निरासात्, हालाहलस्यैव भुजगजन्यत्वेनानुपपत्तिनिरासात्। [illegible] विषशब्दस्य हालाहले प्रसिद्धत्वाद् [illegible] एव [illegible], अत एव न [illegible] इति चेत्, [illegible] तत्र [illegible] एव [illegible] वाच्यत्वे [illegible]। [illegible] वाच्यरूपकसिद्धिकृत् रूपकमपि वाच्यम्, तत्र [illegible] परम्परितरूपकमेव, विद्वन्मानसेत्यत्र राज्ञि हंसरूपणस्य वाच्यस्य वाच्यम्(?) सिद्धिकृत् मनसि मानससरोवररूपक वाच्यमेव [illegible] प्रथममेव [illegible] [illegible], [illegible] मनसि [illegible] प्रतीयमानत्वाभावात्' इत्यादि। न [illegible]। '[illegible] (न च [illegible]।) भुजगजन्यत्वाभावेऽपि जलदे [illegible], [illegible] इति वाच्यम्, [illegible] [illegible] [illegible]। अत एव '[illegible] वितरीतु [illegible] [illegible]' इत्यत्र [illegible] रूपकसंस्थानादुपमासमासमेव [illegible]। ननु विद्वन्मानसहंसेत्यादौ तु [illegible] परम्परितरूपकत्वं वर्तते तत् [illegible] हालाहलरूपणस्य गुणीभूतव्यङ्ग्यत्वमिति, चेत्, [illegible] हालाहलरूपणस्यापि [illegible]। अत्र (तत्र?) तु [illegible] च।

इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसाम्
आश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥ १२७ ॥

अत्राऽच्युतादिपदव्यङ्ग्यमामन्त्रणेत्यादिवाच्यस्य। एतच्चैकत्र एकवक्तृगतत्वेन अपरत्र भिन्नवक्तृगतत्वेनेत्यनयोर्भेदः।

अस्फुटं यथा—

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता
नादृष्टेन न दृष्टेन (A)भवता लभ्यते सुखम् ॥ १२८ ॥

---

इत्यामन्त्रणशब्दस्य पूर्वार्द्धरूपस्य भङ्ग्या व्यङ्ग्यार्थेन सूचितो यो वृथाऽवस्थानखेदः तेन अलसां गोपीमाश्लिष्यन् अत एव पुलकोत्कराञ्चिततनुः हरिः वः पातु। पूर्वार्द्धस्य वाच्यार्थस्तु हे अच्युतनामक अहं गच्छामि, भवतो दर्शनेन किं तृप्तिरुत्पद्यते? नैव, अपि तु स्वगार्हस्थ्योचितचेष्टयैव, प्रत्युत निर्जनस्थयोरावयोः अन्यथैव हतजनो दुर्जनः सम्भावयतीत्येवंरूपः। अत्र च यावत् व्यङ्ग्यार्थो न प्रतिसन्धीयते तावत् इत्यामन्त्रणेत्यादिवाच्यार्थः प्रतीयमानोऽपि प्रतिसन्धानम् अनुपपद्यमानतयैव भासते, व्यङ्ग्यार्थरूपा भङ्गिस्तु प्रतीता तदनुपपत्तिनिरासकृत्। स च व्यङ्ग्यार्थो यथा—हे अच्युत मद्विधनायिकादर्शनेऽपि धैर्यच्युतिरहित, भवतो दर्शनेन किं तृप्तिरुत्पद्यते? नैव, अपि तु उपभोगेनैव; उपभोगे सति तु दुर्जनानामन्यथा सम्भावनाऽपि न दुःखाय, विदग्धजनस्य सम्भावना तु सुखायेत्येवंरूपः। उदाहरणान्तरप्रदर्शनबीजमाह—एतच्चेति। 'एकत्र' प्रमिमरतिमित्यत्र, तत्र हि वाच्यव्यङ्ग्ययोरेकः कविर्वक्ता, 'तद्गतत्वेन' तत्सम्बन्धित्वेन, 'अपरत्र' गच्छामीत्यत्र, तत्र हि वाच्यार्थस्य वक्ता कविः, व्यङ्ग्यार्थस्य तु वक्त्री गोपीति [1]वाच्यसिद्धयङ्गे वाच्यसाधकत्वेन परार्थतया वाच्यादनतिशयो बोध्यः[1]।

(४) अस्फुटमिति विदग्धैरपि क्लेशगम्यत्वं तत्त्वम्। अदृष्ट इति। अत्र भवता सुखमेव न लभ्यते इत्येवं व्यङ्ग्यमक्लेशगम्यम्, दर्शिते तु विवक्षितं व्यङ्ग्यं विदग्धैरपि क्लेशगम्यमेव। क्लिष्टं क्लिष्टमिति पुस्तकभेदेन पाठविकल्पः, क्लेशगम्यमित्येव तु सर्व-

---

(A) भवता इति हेतौ तृतीयेति उदाहरणचन्द्रिकाकाराः।

---

1 'वाच्यसिद्धयङ्गस्य वाच्यार्थसिद्धिकत्वेन भावनाऽभावात्, परमुखनिरीक्षकत्वेन वाच्यादनतिशयित्वम्' ख।

अत्राऽदृष्टो यथा न भवसि वियोगभयं च यथा नोत्पद्यते तथा कुर्या इति क्लिष्टम्।

सन्दिग्धप्राधान्यं यथा—

हरस्तु किञ्चित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥१२९॥

अत्र परिचुम्बितुमैच्छदिति किं प्रतीयमानं किं वा विलोचनव्यापारणं वाच्यं प्रधानमिति सन्देहः ।

---

त्यार्थे । [1]चित्रकाव्यस्यास्फुटस्यगुणीभूतव्यङ्ग्यस्य च अस्फुटव्यङ्ग्यकत्वाविशेषेऽपि चित्रे स्फुटालङ्कारवत्त्वम्, अस्फुटे तु गुणीभूतव्यङ्ग्ये न तथेति भेदः । न च तर्हि चित्रं कथं गुणीभूतव्यङ्ग्यादितोऽधमं प्रागुक्तं सङ्गच्छते इति वाच्यम्, अत्रास्फुटस्यापि व्यङ्ग्यस्य चमत्काराधिक्यम्, चित्रे तु स्फुटालङ्कारवशादेव व्यङ्ग्यस्य चमत्कारतिरोधानात्तदधमत्वमित्यभिप्रायात्[1]* क्लेशगम्यत्वादेवात्र वाच्यादनतिशयो बोध्यः ।

(५) सन्दिग्धेति । प्राधान्यमत्र रसादिव्यञ्जकत्वेन । तथाच प्रतीतस्य रसादेर्व्यञ्जकं किं वाच्यं व्यङ्ग्यं वेति औत्तरकालिकसन्देहविषयत्वं तत्त्वम् । हरस्त्विति । कुमारसम्भवे आकालिके वसन्ते जाते सर्वेषामेव कामभावोद्गमे हरस्यापि किञ्चित् [2]तथात्ववर्णनमिदम् । चन्द्रोदयस्य आरम्भे उत्पत्तिदशायाम् । अत्रेति, महेशशृङ्गारव्यञ्जकत्वात् प्रधानम् । न च द्वयमेव तद्व्यञ्जकत्वात् प्रधानमित्यतस्तुल्यप्राधान्यमेव अस्त्विति वाच्यम्, धैर्यपरिवृत्ते किञ्चित्त्वेन चुम्बनेच्छापर्यन्तायास्तस्या निश्चेतुमशक्यत्वात्, दर्शनादेव विरतिसम्भवात्[2]* । तथाच व्यङ्ग्यसंशयाधीन एव तत्प्राधान्यसंशय इति बोध्यम् । अत्र वाच्यव्यङ्ग्ययोर्द्वयोरपि प्राधान्यस्य संशयितत्वाद् वाच्यादनतिशयः[3] ।

---

1 'स्फुटालङ्कारविरहिते चित्रे तु स्फुटालङ्कारसत्त्वादिति भेदः । तर्हि कथमितोऽधमत्वमिति चेत् अत्र गत्वेनापि व्यङ्ग्यस्य चमत्कारत्वं तु न, स्फुटालङ्कारतिरोहितत्वादतोऽधमत्वम्' क । 2 चिह्नमध्यस्थ ख-पुस्तके नास्ति । ग-पुस्तकन्तु पत्र खण्डितम् । 3 अत परं क-पुस्तके 'वाच्यस्य निश्चितत्वेऽपि तत्प्राधान्यस्य संशयितत्वादेव' इत्यधिको दृश्यते ।

तुल्यप्राधान्यं यथा—

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये
'जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते ॥ १३० ॥

अत्र जामदग्न्यः सर्वेषां क्षत्त्रियाणामिव रक्षसां क्षणात् क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम् ।

काक्वाक्षिप्तं यथा—

मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।

---

(६) तुल्यप्राधान्यमिति । अत्रापि रसादिव्यञ्जकतयैव प्राधान्यम् । ब्राह्मणेत्यादि । दिग्विजये परशुरामं जिगीषुं रावणं प्रति तत्त्रासजनकं मन्त्रिवाक्यमिदम्(A) । भवतामेव भूतये, न तु स्वार्थं प्रतीमील्यर्थः । तथेति ब्राह्मण इत्यर्थः । मित्रमिति चार्थोऽत्र बोध्यः । अन्यथेति अतिक्रम इत्यर्थः । दुर्मनायते इति भविष्यत्सामीप्ये वर्तमाना । अत्रेति, '²वाच्यस्य' मित्रब्राह्मणदौर्मनस्यस्य । समं प्राधान्यमिति द्वयोरपि भर्त्सयितत्वेन त्रासरूपव्यभिचारिमात्रव्यञ्जने द्वयोः साम्यात्, शापपापोत्पादकत्वेन हि वाच्यात् त्रासः, दर्शितव्यङ्ग्यात्तु साक्षात् त्रासः ; 'स च व्यञ्जनया सामाजिकबोध्य'³ । अत्र प्राधान्यसाम्यादेव वाच्यादनतिशयः ।

(७) काक्वेति । आक्षिप्तत्वं ⁴सहसा बोधत्वम् । तथाच शाब्दबोधतः प्रागेव पदार्थविषया ⁵उपस्थितिः । मथ्नामीति । सहदेवं प्रति सन्धिकरणासहिष्णो-

---

(A) ब्राह्मणेति । महावीरचरिते द्वितीयेऽङ्के रावणमुद्दिश्य परशुरामप्रेषितपत्रान्यतया पद्यमिदमुपलभ्यते, अतो दिग्विजय इत्यादिकं टीकाकृद्वाक्यं साहित्यदर्पणटीकायामप्येतन्मतानार्थकं रामचरणतर्कवागीशवाक्यञ्च सन्दिग्धप्रामाण्यकमिति मन्तव्यम् । अत्र श्लोके 'भवतामेव न तु ब्राह्मणानाम्, जामदग्न्ये जीवति तेषामनिष्टस्यासम्भवादिति भावः । भवतामेवेति बहुवचनेन सकलसभ्याऽऽक्षेपः । अन्यथा ब्राह्मणातिक्रमस्यात्यागे तथा सादृशः अन्मन प्रभृति सकलरहस्यवेदीत्यर्थः (एतेन सत्यामपकारेच्छायां तत्साधने प्रयासापेक्षा नास्तीति सूच्यते ) इत्युदाहरणचन्द्रिकायां विशेषः । 'दुर्मनायते इति गम्भीरोक्त्या चमत्कारित्वात् विपक्षवत् सन्धेरपि विवक्षितत्वाच्च' इति प्रदीपः ।

---

1. 'जामदग्न्य च' इति पाठान्तरम् । 2 'अत्र जामदग्न्यः क्षत्रियाणामिव रक्षसामपि क्षयं करिष्यतीति व्यङ्ग्यस्य मित्रब्राह्मणदौर्मनस्यरूपवाच्यस्य च समं प्राधान्यम्' इत्यत्र 'वाच्यस्य' इत्यस्य निरूपणीयमिति हि भौति, त्रासजनकत्वेनैवात्र चमत्कारः, त्रासजनकत्वेनैव मित्रब्राह्मणातिक्रमस्यापीति प्राधान्यसाम्यम्' च । 3. अयमंशः ख-पुस्तके नास्ति । 4 'सह बोधत्वम्' ख । 5 'उपस्थापकत्वे तात्पर्यं' ख ।

संचूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥ १३१ ॥

अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितम्।

असुन्दरं यथा—

वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणंतीए।
घरकम्मवावडाए वहुए सीअन्ति अंगाइं ॥ १३२ ॥

अत्र दत्तसङ्केतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यात् सीदन्त्यङ्गानीति वाच्यं सचमत्कारम्।

---

भीमस्योक्तिरियम्। मथ्नामीत्यादौ सर्वत्र भविष्यत्सामीप्ये वर्तमाना, मथिष्यामीत्याद्यर्थोऽर्थः। उरस्तः इत्यादि। सुयोधन इति दुर्योधनस्य अपरं नाम। भवतां नृपतिरित्यनेन स्वानभीप्सन्धिकरणात् स्वनृपतित्वाभावसूचनम्। अत्र कृतकौरव शतवधप्रतिज्ञस्य भीमस्य न मथिष्यामीत्युक्तिर्बाधितार्था, अतोऽत्र शिरश्चालन सहकृता काकुः प्रतीयते, तया च 'न न मथिष्यामी'त्यादिरीत्या अपरनञर्थं आक्षिप्यते। तथाच नञर्थद्वयेन प्रकृतार्थे पर्यवस्यतीत्याह—अत्रेति। मथ्नाम्येवेत्यादीति मथ्नाम्येवेत्यादेरेकदेशः प्रकृतनञर्थ एव व्यङ्ग्यो वाच्य', प्रकृतनञर्थस्य वाच्यत्वेन नञ्द्वयार्थस्मरणस्य प्रकृतार्थपर्यवसायकत्वेन व्यङ्ग्यत्वाभावात्। अत्र 'व्यङ्ग्यस्यापि नञर्थस्य वाच्यनञर्थसहभावेनैव उपस्थित्या'* शाब्दबोधजननाद् वाच्यतुल्यत्वेन वाच्यानतिशयो बोध्यः।

(८) असुन्दरमिति। रसादिबोधजनने 'वाच्यसापेक्षं व्यङ्ग्यत्वं तदरम्। अत एवास्य वाच्यमुखनिरीक्षकत्वेन वाच्यानतिशयो बोध्यः'। एतदुदाहरणं मामतरुण मित्यादेव दर्शितम्। सौलभ्यात्तु तत्तुल्यमन्यदाह—वाणीरेति।

वाणीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्या।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥ इति संस्कृतम्।

अत्रेति। इति व्यङ्ग्यादित्यत्र इत्यादिव्यङ्ग्यादित्यर्थः। तथाच 'वधूश्च तत्र न गता' इत्येतत्पर्यन्ताद् व्यङ्ग्यादित्यर्थः। अयं भावः—वध्वा अगमनमात्रं न

---

१ 'वाच्येन नञर्थेन साधनञ्ज्ञानपर्यन्तमपि शाब्दबोधं प्रत्युपस्थित्या' इति ख। * 'वाच्यसहभावेनैव' ख

(६७) एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ॥ ४६ ॥

यथायोगमिति—

व्यज्यन्ते वस्तुमात्रेण यदाऽलङ्कृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात्(A) ॥

( ध्वन्यालोक, उद्योत २, श्लोक ३०, )

इति ध्वनिकारोक्तदिशा वस्तुमात्रेण यत्रालङ्कारो व्यज्यते न तत्र गुणीभूतव्यङ्ग्यत्वम् ।

---

तदीयविप्रलम्भव्यञ्जकम् आगमनस्य तस्या अकार्यान्तरत्यागेन गृहकर्मसमापनानन्तरं जिगमिषयाऽपि वा सम्भवात्, किन्तु शकुनिकोलाहलश्रवणेन सीदद्गृहा तस्या अगमनमेव तद्व्यञ्जकमिति वाच्याङ्गावसादमहकारेणैव रसं व्यनक्ति वाच्यमुखनिरीक्षकत्वात् अस्यातन्त्र्येण वाच्यन्यूनचमत्कारीति । वाच्य उक्तहेतुकोऽङ्गावसादस्तु उक्तव्यङ्ग्यनिरपेक्ष एव रसव्यञ्जक इति सोऽधिकचमत्कारी, शकुनिकोलाहलस्योद्दीपकत्वेन तदधीनाङ्गावसादस्यैव व्यङ्ग्यनिरपेक्षस्य यथोक्तव्यङ्ग्य विनाऽपि विप्रलम्भव्यञ्जकत्वात् ।

एषामिति उक्ताष्टविधव्यङ्ग्यानामित्यर्थः । 'भेदा' प्रभेदाः । पूर्ववदिति, ध्वनेर्यथा लक्षणादिमूलकत्वादिभेदेन एकपञ्चाशद्विधत्वम्, तथा एषामपि प्रत्येकमेकपञ्चाशद्विधत्वेन अष्टाधिकचतुःशतसङ्ख्यत्वमित्यर्थः । तत्रैव कश्चिद् भेदो गुणीभूतो न सम्भवतीत्याह—यथायोगमिति, यथासम्भवमित्यर्थः । असम्भवस्थलं दर्शयति—व्यज्यन्त इति । 'ध्वन्यङ्गता' काव्यस्य ध्वनित्वनिर्वाहकता । 'काव्यवृत्ते' तादृशकाव्यप्रवृत्ते । 'तदाश्रयात्' ध्वनित्वाश्रयणात् । ननु किमत्र बीजमिति चेत् काव्यस्य चमत्कारस्तावत् व्यङ्ग्यस्य व्यङ्ग्यत्वेन अलङ्कृतित्वेन च, तत्र व्यङ्ग्यत्वेन चमत्कारस्य अगूढत्वादिना गुणीभावेऽपि अलङ्कृतित्वेन चमत्कारस्य अगुणीभाव एवेति बीजम्(B) । न चैवं शब्दशक्त्या अलङ्कारेण वा

---

(A) 'काव्यस्य कविव्यापारस्य वृत्तिस्तदाश्रया अलङ्कारप्रथना' इत्यभिनवगुप्ताचार्याः ।

(B) अत्र प्रदीपकाराः—ननु वस्त्वलङ्कारापेक्षया वस्तुमात्रस्य चारुतायानियमस्तदा कथमलङ्कारेण वस्तुमात्रव्यङ्ग्ये ध्वनित्वमिति चेदुच्यते—स एवार्थो वाच्य सन् न तथा चमत्करोति यथा व्यङ्ग्यतामापन्न इत्यनुभवसिद्धम्, अतो वाच्यता अपकर्षहेतुर्व्यङ्ग्यता चोत्कर्षायेति स्थितम् । एवं चालङ्कारेण वस्तुमात्रं व्यङ्ग्यं तत्रालङ्कारस्य वाच्यत्वेन किञ्चिदपकर्षाद् वस्तुमात्रस्य च व्यङ्ग्यत्वेन किञ्चिदुत्कर्षात् युक्त एव ध्वनित्वम्, यत्र तु वस्तुनाऽलङ्कारो व्यज्यते [illegible] वस्त्व-

(६८) (A)सालङ्कारैर्ध्वनेस्तैश्च योगः संसृष्टिसङ्करैः।

सालङ्कारैरिति तैरेवालङ्कारैः अलङ्कारयुक्तैश्च तैः। तदुक्तं ध्वनिकृता—

स गुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः।
सङ्करसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा॥ इति

(ध्वन्यालोक उद्द्योत ३ श्लोक ४४)

व्यङ्ग्यस्यालङ्कारस्यापि तथात्वेन वस्तुमात्रेणेति मात्रपदेन कथ 'व्यञ्जका लङ्कारव्यवच्छेद कृत इति'[1] वाच्य तत्र व्यञ्जकेन शब्दश्लेषालङ्कारेण वाच्यार्था लङ्कारेण च काव्यस्य चमत्कृतत्वात् 'व्यङ्ग्यालङ्कारस्य वाच्यतुल्यचमत्कृतिप्रयोजक त्वेन 'वाच्याद्नतिशयाद् गुणीभावात्'[3]।

सालङ्कारैरिति 'तैः' 'गुणीभूतव्यङ्ग्यप्रभेदैः, 'सालङ्कारैः' चकारात् निरलङ्कारैश्च 'ध्वनेः' सङ्करादिचतुर्विधे 'योग' इत्यर्थः। तेषां सालङ्कारणापि प्रभेदवैचित्र्यदर्शनार्थं सालङ्कारैरित्युक्तम्। सालङ्कारता च स्फुटालङ्कारवत्ता, तेन निरलङ्कारताऽस्फुटालङ्कारवत्तैव, अलङ्कारमात्राभावे सालङ्कारत्वघटितकाव्य लक्षणानुपपत्तेः। स्फुटालङ्कारवत्त्वमपि अस्फुटस्य (गाह्य ?) प्रभेद विहायैव बोध्यम् तस्य स्फुटालङ्कारवत्त्वे चित्रकाव्यत्वापत्तेः। अयमेव हि चित्रास्फुटयोर्भेदः प्राग् दर्शित'[4]। अलङ्कारयुक्तैरिति, इयं 'सालङ्कारै'रित्यस्य व्याख्या। अलङ्कारैरिति तु अर्थवशलभ्य व्याख्यातम्, अपराङ्गस्य रसवदाद्यल ङ्कारूपत्वात्, स गुणीति। स ध्वनिः स्वैः प्रभेदैः गुणीभूतव्यङ्ग्यैश्च सहेत्यर्थः।

लङ्कारयोर्वाच्यत्वव्यङ्ग्यत्वाभ्यामतिशयेनैवोत्कर्षापकर्षाविति कुतो गुणीभूतव्यङ्ग्यत्वावकाशः। इदन्तु चिन्त्यम्, एवं चारुत्वाभावनिबन्धनं गुणीभूतत्वं मा भूत्, अगूढत्वादिनिबन्धनं तु तस्मिन् को वारयितेति।

(A) अन्ये प्रदीपकारकृतं व्याख्यानन्तु 'सालङ्कारै'रिति विभिन्नार्थकल्पनानाशब्दैक शेष एकत्रालङ्कारपदस्य भावप्रधानत्वात्। (अयम्भाव एकशेषे अलङ्कारपदमलङ्कारत्वपर सन्निहित अलङ्कार एवेति सालङ्कारपदमेव अलङ्कारं बाधयति इत्येकत्र, अन्यत्र सालङ्कार पदम् अलङ्कारसहितार्थकमिति सरूपाणामिति सूत्रेण एकशेष इति) तथाच तैः सालङ्कारैरलङ्कार

1 'तेनाव्यवच्छेद'मिति क व्यञ्जकानितशालङ्कृतिस्स वा क। 3 गुणीभूतत्वमिताभिप्रायात क 4. 'गुणीभूतव्यङ्ग्यैः' सालङ्कारैश्चतात। तेन निरलङ्कारत्वमन्यथैवाद यथा प्रभेदवैचित्र्या सालङ्कारैरपि न प्रभेदान्तरविरहितं दर्शितम् क।

(६६) अन्योन्ययोगादेवं स्याद्भेदसंख्याऽतिभूयसी ॥४७॥

एवम् अनेन प्रकारेण अवान्तरभेदगणनेऽतिप्रभूततरा गणना, तथा हि—शृङ्गारस्यैव भेदप्रभेदगणनायामानन्त्यम्, का गणना तु सर्वेषाम्।

सङ्कलनेन पुनरस्य ध्वनेस्त्रयो भेदाः व्यङ्ग्यस्य त्रिरूपत्वात्। तथा हि—किञ्चि[1]द्वाच्यतासहं किञ्चित्त्वन्यथा,(A) तत्र वाच्यतासहमविचित्रं विचित्रं चेति। अविचित्रं वस्तुमात्रं विचित्रं त्वलङ्काररूपम्। यद्यपि प्राधान्येन तदलङ्कार्यम्, तथाऽपि ब्राह्मणश्रमणन्यायेन तथोच्यते। रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः। स हि रसादिशब्देन शृङ्गारादिशब्देन वाऽभिधीयेन। न चाभिधीयते, तत्प्रयोगेऽपि विभावाद्यप्रयोगे(B) तस्याप्रतिपत्तेः, तदप्रयोगेऽपि विभावादिप्रयोगे तस्य प्रतिपत्तेश्चेत्यन्वयव्यतिरेकाभ्यां

सङ्कलनेन पुनरिति। गुणीभूतव्यङ्ग्यमपि न पृथक्, किन्तु व्यङ्ग्यवत्काव्यमेव ध्वनिरिति सङ्कलनम्। त्रिरूपत्वादिति वाच्यतासहस्य वस्त्वलङ्काररूपत्वाद् द्वैविध्यं वाच्यताऽसहन्त्वेकमिति त्रिरूपत्वम्। वाच्यतासहमिति, व्यङ्ग्ययोर्वस्त्वलङ्कारयोर्वाचकेन शब्देनापि तत्रैव काव्ये वक्तुं शक्यत्वात्। किञ्चित्तु अन्यथेति रसादिलक्षणस्यार्थस्य तत्काव्यस्थशब्दैरोक्तौ तु रसादित्वमेव न तस्य सम्भवतीति स्वयमेव व्याख्यास्यति। यद्यपीत्यादेरर्थः प्रागेव व्याख्यातः। स हीति, 'रसादिशब्देने'त्यत्र तत्काव्यस्थेनेति शेषः। 'तत्प्रयोगे' तत्काव्यमध्ये तत्प्रयोगे।

सहितैश्च तैरित्यर्थः। तेन ध्वनिना गुणीभूतव्यङ्ग्येन वाच्यालङ्कारेण च ध्वनेर्योगः इति पूर्वापराभ्यामुक्तं भवति' इति।

(A) अन्यथेति वाच्यताऽसहमित्यर्थः।

(B) तस्याप्रतिपत्तेरिति। रसादिपदप्रयोगे स्वशब्दवाच्यतादोषोऽप्युद्घोषकारैरुक्तः। तथाहि "अभिधानस्य च तादृशे विषये दोषता वक्ष्यतीत्यपि बोध्यम्। एवं विभावादिभिर्व्यञ्जितस्य रसस्य क्वचित् रसादिपदेनानुवादे तु न दोषः; यथा—शृङ्गारस्योपनतमधुना राज्यमेकातपत्रमित्यादौ। यद्यपि वस्त्वलङ्कारयोरपि वस्त्वलङ्कारपदाभ्यामभिधानेऽपि न

1 '-द्वाच्यतां सहते' इति मुद्रितपुस्तकेषु पाठः।

विभावाद्यभिधानद्वारेणैव प्रतीयत इति निश्चीयते, तेनाऽसौ व्यङ्ग्य एव, (A)मुख्यार्थबाधाद्यभावान्न पुनर्लक्षणीयः ।

अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्ययोर्वस्तुमात्ररूपं व्यङ्ग्यं विना लक्षणैव न भवतीति प्राक् प्रतिपादितम् । शब्दशक्तिमूले तु अभिधाया नियन्त्रणेनानभिधेयस्यार्थान्तरस्य तेन सहोपमादेरलङ्कारस्य च निर्विवादं व्यङ्ग्यत्वम् ।

---

तेनासौ व्यङ्ग्य एवेति, अनेन वाच्यतामात्रनिरासः साक्षात्कार्यत्वन्तु सिद्धान्तितमेवेति बोध्यम् । नन्वेवं रसादिरूपविषयनियन्त्रितैव व्यञ्जनावृत्तिरस्तु नान्यविषयेत्यत आह—अर्थान्तरेति । प्राक् प्रतिपादितमिति, यस्य प्रतीतिमाधातुमित्यादिना नाभिधा समयाभावादित्यादिना एवमप्यनवस्था स्यादित्यादिना चेत्यर्थः । ननु तथाऽपि शब्दशक्तिमूला व्यञ्जना नाद्रियतामित्यत आह—शब्दशक्तिमूले त्विति । अनभिधेयस्येति अभिधामात्रेण प्रतिपादयितुमशक्यस्येत्यर्थः, केवलाया अभिधाया प्रकरणादि[1]कुण्ठितत्वादिति भावः । व्यञ्जनासहकारेणाभिधायास्तु तद्बोधकत्वमस्त्येवेति बोध्यम् । "तेन महेत्युपमाध्वनी बोध्यम्[2]" । निर्विवादमिति "शक्तिमात्रजन्यबोधादस्य बोधस्य वैलक्षण्यानुभवेन निर्विवादमित्यर्थः[3]" । ननु

---

चमत्कारस्तथाऽपि पदमन्वयबलेन प्रतीतानां चमत्कारित्वमस्त्येव । रसादीनां तु नैवम्, विभावादिमुखेन प्रतीतानामेव चमत्कारित्वादिति भावः" इति ।

(A) मुख्यार्थबाधाद्यभावादिति । अयमर्थः—आक्षेपसमाधानाभ्यामुपपादित उद्योतकारैः । तथाहि "ननु यदी प्रतीयमानत्वाद्धानिव तात्पर्यविषयानुपपत्त्या लक्षणाऽस्त्वित्यत आह—आदीति । अतात्पर्यविषयस्यापि रसस्य प्रत्ययात्, रसस्य स्वप्रकाशानन्दमयसंविद्विश्रान्तिरूपत्वेन तस्मिन् लक्ष्ये प्रयोजनान्तरासम्भवात्, विभावादिवाचकेषु पदेषु कुशलादिपदवत् प्रसिद्ध्यभावेन रूढ्यसम्भवेन च न लक्षणेति भावः । प्रयोजनादिकं विना तु न लक्षणा, अन्यथा हेतुत्रयसापेक्षत्वनियमात् । तदन्तरेण भवन्ती वृत्तिस्तु व्यञ्जनैव, सादृश्यमात्रात्तु लक्षणेत्युच्यते इति दिक्" इति ।

---

1 'प्रतिबद्धत्वादिति' ख । 2, चयमंश ख-पुस्तके नास्ति, न पुस्तकन्तु पत्र खण्डितम् । 3 'यद्यपि प्रथमार्थप्रतीतस्योत्तरकालस्वीकारो द्वितीयार्थस्य व्यञ्जनं निषिद्धस्तौ विवादोऽस्त्येव, तथापि प्रतिरोध्यबोधजनकस्य प्रतिबन्धकाविघटकस्य वा मानसोत्तेजकत्वाद्यभावेन निष्पन्नप्रतीतिजनकादभिधामात्रजन्यबोधादस्य वैलक्षण्यानुभवेन विलक्षणकार्यसाधन विलक्षणकारणजन्यत्वेन च व्यञ्जनाव्यापारसिद्धिरिति माणिक्यचन्द्रेति भाव' ख ।

अर्थशक्तिमूले 'तु विशेषे सङ्केतः कर्तुं न युज्यत इति सामान्यरूपाणां पदार्थानामाकांक्षा-सन्निधि-योग्यतावशात् परस्परसंसर्गो यत्रापदार्थोऽपि [1]विशेषवपुर्वाक्यार्थस्तत्राभिहितान्वयवादे (A)का वार्त्ता व्यङ्ग्यस्याभिधेयतायाम्। येऽप्याहुः—

---

तथाऽपि अर्थशक्तिमूला व्यञ्जना माद्रियतां तदन्तिकमेव रन्तुमित्यादिबोधस्तु शक्त्यैवास्ताम्[4], न तु मानसस्तद्बोध शब्दान्वयव्यतिरेकानुविधायित्वेन शाब्दत्वात्, नापि लक्षणया तद्बोध, मुख्यार्थबाधाद्यभावात्। [5]न च श्रुतशब्दस्य तत्र शक्तिग्रहकाराभावात् कथं तत्र शक्तिग्रह इति वाच्यम्, अगृहीतयैव शक्त्या तद्बोधस्य स्वीकार्यत्वात्[5]*। न च तर्हि तत्र तादृशशब्दस्य शक्तौ किं प्रमाणमिति वाच्यम्, लक्षणया अजन्य शाब्दबोध शक्तिजन्य एवेति व्याप्तेरेव तत्र प्रमाणत्वादित्यतस्तस्या व्याप्तेर्व्यभिचारमाह नैयायिकमते[6] दर्शयति—**अर्थशक्तिमूले त्विति।** ननु शक्तिग्रहकालदृष्टव्यक्तिविशेष एव शक्तिग्रह, तथाच शाब्दबोधविषये तद्भिन्नव्यक्त्यन्तर एव व्यभिचारो दर्श्यताम्, किं संसर्गे व्यभिचारप्रदर्शनेनेत्यतस्तत्रापि शक्तिर्गृहीत एवेत्यतो न व्यभिचार, किन्तु तदीयसंसर्ग एव व्यभिचार इति दर्शयति—**विशेषे सङ्केत इति।** 'विशेषे' शक्तिग्रहकालदृष्टमात्रव्यक्तिविशेषे। **न युज्यते** इति आनन्त्यव्यभिचाराभ्यामिति भाव। 'सामान्यरूपाणां' सामान्यधर्मावच्छिन्नानाम्, तथाच सामान्यलक्षणयैव समस्तव्यक्तिषु शक्तिग्रह इत्यभिप्राय। [7]"परस्परसंसर्गो" इत्यत्र भासमानतया तैरभ्युपगत इति शेष[7]*। 'यत्र' नैयायिकमते, 'अपदार्थ'" पदाशक्य, 'विशेषवपु' संसर्गरूप, 'वाक्यार्थ' वाक्येनैव प्रतिपाद्य। तथाच अशक्ये तत्रैव तद्व्याप्तेर्व्यभिचारोऽनेन दर्शित। 'का वार्त्ता' क प्रसङ्ग।

---

(A) का वार्त्तेति। विस्तारितोऽयमर्थः प्रदीपकारैः। तथाहि "अर्थशक्तिमूलेऽप्येवमङ्गीकर्त्तव्यम्, यत पदेभ्य प्रथम पदार्थस्मृति, अथ पदार्थविशेषाणामन्वयविशेषरूपस्य वाक्यार्थस्य प्रत्यय, ततो व्यङ्ग्यप्रतीतिरिति तृतीयकक्षाया कुतोऽभिधाया प्रसरणम्, द्वितीयकक्षायामेव तदनपेक्षणात्। यतोऽभिहितान्वयवादेऽप्यन्वय पदार्थान्तर आकाङ्क्षादिवशेन प्रतीयते, शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इति च सर्वमिदम्" इति। व्याख्यात चैतदुद्द्योते—"विशेषरूपस्य

(१) शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति ।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥(A)

इत्थं नैयायिकमते तद्व्याप्तेर्व्यभिचारं दर्शयित्वा संसृष्टपदार्थशक्तिवादिनां मीमां-

गवान्वितकर्मत्वान्विरूपस्य । तदनपेक्षणादिति वाक्यार्थस्यापदार्थसंसर्गरूपस्य अपूर्वत्वेन अनभिधेयत्वं कथं व्यङ्ग्यस्याभिधेयत्वमिति भावः । तदेवोपपादयति—यतोऽभिहितेति । एवं च अपूर्वत्वाद्वाक्यार्थ इव व्यङ्ग्यार्थेऽपि सङ्केतग्रहो न सम्भवतीति भावः । परमार्थस्तु "अयं भाव —यन्मते वाक्यार्थबोधविषयीकृतमपि सम्पर्ण शब्दोपस्थापनपरिक्षीणशक्तिरभिधा नाव भासयतीति तदर्थं तात्पर्यवृत्तिरभ्युपगम्यते, तन्मते वाक्यार्थबोधोत्तरकालिकस्य व्यङ्ग्यस्योपस्थितौ नैवाभिधाप्रभाव इति किमु वक्तव्यम्' इति बालबोधिन्याम् ।

(A) शब्दवृद्धेति । कारिकाद्वयस्य आकरो नावाप्युपलब्धः, सुगमतया व्याख्यान्तराणि दूषितम् । तत्र 'अत्र कारिकाद्वये प्रतिपाद्यं वाच्य' इत्यध्याहार्यम् । प्रत्यक्षमत्र करण परम् । तथा च बालः 'शब्दवृद्धाभिधेयान्' शब्दं श्रूयमाणं 'देवदत्त गामानय' इत्यादिवाक्य रूपं, वृद्धौ प्रयोजकवृद्धप्रयोज्यवृद्धौ अभिधेयोऽर्थं गवानयनादिरूपं, एतान् 'प्रत्यक्षेण' प्रत्यक्ष- हेतुना श्रोत्रादिना 'अत्र' व्युत्पत्तिकाले 'पश्यति' साक्षात् करोतीत्यर्थः । तत्र श्रोत्रेण शब्दं चक्षुषा च वृद्धाभिधेयान् साक्षात् करोतीति भावः । एतेन प्रयोजकवृद्धप्रयोज्यवृद्धप्रयुज्यमान शब्दगवानयनादिक्रियाणां प्रत्यक्षविषयत्वमुक्तम् । श्रोतुश्चेति, चकारः प्रतिपन्नत्वमित्यनन्तरं योज्यः । अनुमानपदमत्र करणव्युत्पन्नम् । श्रोतुः' प्रयोज्यवृद्धस्य प्रतिपन्नत्वं वाक्यार्थाभि ज्ञत्वं च (कर्म) अनुमानेन अनुमितिकरणभूतया 'चेष्टया गवानयनादिचेष्टारूपेण हेतुना पश्यतीति सम्बन्धः । 'पश्यति' जानाति अनुमिनातीत्यर्थः । 'अयम् एतच्छब्दजन्यैतदर्थ गोचरज्ञानवान् एतच्छब्दश्रवणानन्तरमेतदर्थगोचरचेष्टावत्त्वात्' इत्यनुमानाकारः । पश्यतीत्यत्रापि श्रोतुरित्यस्यान्वयो बोध्यः । अन्यथाऽनुपपत्त्येति अन्यथाऽनुपपत्त्या अर्थापत्त्या इत्यर्थेनान्वयः । अनन्तरं 'द्व्यात्मिकां वाचकत्वं वाच्यत्वं चेति द्विविधां शक्तिं सङ्केतापरनामकं वाच्यवाचकयोः सम्बन्धम् अन्यथाऽनुपपत्त्या 'गामानयेत्यादिवाक्यश्रवणात् गवानयनादिज्ञानम् एतद्वाक्य तै द्वयोरस्य वाच्यवाचकभावसम्बन्धं विना अनुपपन्नम्' इत्यनुपपत्त्या (इत्यनुपपत्तिरूपया) अर्थापत्त्या अर्थापत्त्याख्यप्रमाणेन (हेतुना) बोधन् जानीयादित्यर्थः । अन्ये तु— द्व्यात्मिकाम् आश्रयभूतस्य वाक्यस्य वाचकत्वम् विषयभूतस्यार्थस्य वाच्यत्वमेव द्वयम् आत्मा स्वरूपं यस्याः स्तां गम्भूतामिति वाच्यवाचकरूपं द्वयम् आत्मा आत्मीयं प्रतियोग्यनुयोगिभूतं यस्यास्तादृशीमिति च व्याचख्युः । अनन्तरं च त्रिप्रमाणकम्' उक्तरीत्या प्रत्यक्षानुमानार्थापत्तिरूपप्रमाणत्रयाधिगतं 'सम्बन्धं' सङ्केतम् अवबोधेन (आवापोद्वापाभ्यां शब्दस्य गौरवार्थ अयं विभक्ते कर्मत्वमिति रीत्या विशेषेण पदपदार्थनिष्ठतया) अवधारयेदिति कारिकाद्वयार्थ इति बालबोधिनीकाराः ।

(२) अन्यथाऽनुपपत्त्या तु ¹बोधेच्छक्तिं द्वयात्मिकाम्।
अर्थापत्त्याऽवबुध्यन्ते संबन्धं त्रिप्रमाणकम् ॥

सकलानामपि मते तद्व्याप्तेर्व्यभिचारं दर्शयितु(A) शक्तिग्रहप्रकारप्रदर्शिकां परकीय·

शाब्दवृद्धेति। प्रत्यक्षपदं करणपरम्। तत्र श्रोत्रेण शब्दं पश्यति साक्षात्करोतीत्यर्थः। तथा चक्षुषा वृद्धैरभिधेयान् गवानयनादींश्च साक्षात्करोतीत्यर्थः। श्रोतुः प्रयोज्यवृद्धस्य प्रतिपन्नत्वं कार्यताज्ञानवत्त्वं चेष्टादिकरूपेणानुमानेन अवबुध्यन्तेत्यपेतनेनान्वय। अन्यथाऽनुपपत्त्या कारणं विना कार्यानुपपत्त्या, द्वयात्मिकां कार्यकारणत्वरूपां शक्तिं बोधेन् जानीयादित्यर्थः। अर्थापत्त्या तदर्थसम्बन्धं विना वाक्यस्य तज्ज्ञानजनकत्वानुपपत्त्या सम्बन्धं वाच्यवाचकभावरूपम् अवबुध्येतेत्यर्थः सम्बन्धाभावे हि अज्ञातकपदर्थोऽन्यतमस्यापि बोधः स्यादित्यतिप्रसङ्ग इति भावः। त्रिप्रमाणकमिति, प्रत्यक्षानुमानार्थापत्तिरूपप्रमाणत्रयमूलकमित्यर्थः" इति प्रभा।

"प्रतिपन्नत्वं प्रतिपत्तिर्ज्ञानमिति यावत्। अवबु-वेतेत्यपिसेनान्वय। 'अनुमानेन चेष्टये'ति चेष्टारूपानुमितिजनकज्ञानविषयहेतुनेत्यर्थः। 'अन्यथाऽनुपपत्त्या' कारणं विना कार्यानुपपत्त्येत्यर्थः। 'बोधे' बोधनिष्ठकार्यतानिरूपिताम्, 'द्वयात्मिका' इयं कार्यं कारणं च आत्मा प्रतियोगी यस्यास्ता कारणत्वरूपां शक्तिं बुध्येतेत्यपिशेषेणान्वयः। बोधेरिति पाठे ज्ञाननिरूपितामिति शेषो बोध्यः। 'सम्बन्धं' वाच्यवाचकभावरूपम्। एवं शक्तिग्रहे त्रिप्रमाणकमाहुरित्यर्थः। अनुपपत्तिरर्थापत्तिरेव" इत्युद्योतः।

"शब्द गामानय इत्यादि वाक्यम्, वृद्धौ प्रयोज्यप्रयोजकौ, अभिधेयं गवानयनादिरूपं संसर्गं। प्रत्यक्षेण तद्धेतुना चक्षुषा श्रवणेन च। अत्र व्युत्पत्तिकाङ्क्षं। पश्यति जानाति। श्रोतुः प्रतिपन्नत्वं ज्ञानवत्त्वम्। चेष्टया अङ्गक्रियया अनुमानेन अनुमितिकरणेन चेष्टया (चेष्टया ?) हेतोरित्यर्थः। अयम् एतच्छब्दजन्यैतदर्थगोचरज्ञानवान् एतच्छब्दश्रवणानन्तरमेतदर्थगोचरचेष्टावत्त्वादित्यनुमानाकारः। चकारः प्रतिपन्नत्वमित्यनन्तरं योज्यः। श्रोतुः प्रतिपन्नत्वमपि जानातीत्यर्थः। अन्यथेत्यादि, द्वयोः वाच्यवाचकयोरर्थयोः आत्मा स्वरूपं यस्या (इति) शक्तिविशेषणम् आश्रयत्वेन शब्देषु विषयत्वेन च अर्थेषु वृत्ते। अनुपपत्तिश्च शब्दार्थज्ञानं वृत्तिं विना अनुपपन्नम्, अन्यथाऽतिप्रसङ्गात्। सा च शक्तिः स्वाभाविकसम्बन्धरूपा- (ईश्वर) प्रकारा। अर्थापत्त्या आवापोद्वापदर्शनसहकृतया, सा च आनयनाद्यन्विते गवि गोपदशक्तिस्तदितराप्रतिपादकत्वे सति प्रतिपादकत्वरूपा। त्रिप्रमाणकं प्रत्यक्षमनुमानमर्थापत्तिश्चेति प्रमाणत्रयम्, अनुपपत्तेरपि अर्थापत्तिमेकत्वात्। सिद्धमतस्यानुवादोऽयम्। तदनुपपत्तिस्तत्समर्थनं च अप्रकृतत्वात्नोद्भावित"मिति चक्रवर्ती। बालबोधिन्याम् उद्धृतमिदम्।

(A) अत्र च कल्पतरोः 'शक्तिग्रहप्रकारप्रदर्शिकां परकीयां कारिकां' इत्यत्रापि शक्ति-

1.

इति प्रतिपादितदिशा—

'देवदत्त गामानय' इत्याद्युत्तमवृद्धवाक्यप्रयोगाद् देशाद्देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सति 'अनेनास्माद् वाक्यादेवंविधोऽर्थः प्रतिपन्नः' इति तच्चेष्टयाऽनुमाय तयोरखण्डवाक्यवाक्यार्थयोरर्थापत्त्या वाच्यवाचकभावलक्षणं सम्बन्धमवधार्य बालस्तत्र व्युत्पद्यते ।

---

कारिकामाह—येऽप्याहुः शब्दवृद्धेति(A)। येऽपि अन्विताभिधानवादिन आहुरिति दूरे अन्वयः। शब्दवृद्धेति। गामानय इत्यादि शब्द, गवाद्यानेता व्युत्पन्नो वृद्ध, गवाद्यानयनरूपोऽर्थोऽभिधेय, 'प्रत्यक्षेण' इन्द्रियेण, 'पश्यति' जानाति, शब्दस्य चाक्षुषत्वात्। चेष्टया अनुमानेन इत्यन्वय, ज्ञायमानलिङ्गकरणत्वस्य तत्सिद्धान्तत्वात्। अन्यथेति, अस्मात् शब्दात् अस्मिन्नर्थे अस्य प्रतिपन्नत्वम् अनयोरर्थशब्दयो सम्बन्धं विना अनुपपन्नमित्येवंरूपा अर्थापत्तिरेव अन्यथाऽनुपपत्ति। द्वयात्मिकामिति विषयतासम्बन्धेन द्वयोरर्थशब्दयो आत्मा स्वरूप यस्या इति विग्रहेण तदुभयविषयामित्यर्थ, इच्छारूपाया अतिरिक्ताया वा शक्तेरुभयविषयत्वात्। अनेन अखण्डवाक्यतदर्थयो प्रथम शक्तिग्रह दर्शयित्वा पश्चात् पदपदार्थयो शक्तिग्रहं दर्शयति—अर्थापत्त्येति। अर्थापत्तिरत्र आवापोद्वापरूपा। बोधेरित्यत्र बालक कर्त्ता, बुधिर्भौवादिक। अवबुध्यन्ते इत्यत्र बालका कर्त्तार, बुधिर्दैवादिक आत्मनेपदी। ईदृशव्याख्यानुसारिणी वृत्तिर्बोध्या। 'अखण्डवाक्यवाक्यार्थयो शक्तिग्रहानन्तरं पदपदार्थयोरन्य(B) शक्तिग्रह आवापोद्वापेनेति कारिकार्थं व्याचष्टे'[1]

---

ग्रहो न तु व्यक्त्यन्तरे इति तन्मतेऽपि व्यक्त्यन्तरे तदीयमर्शो च तद्व्याप्तेर्व्यभिचार इति दर्शयिष्यन्' इत्यश, तथा—

(A) अत्र पर स्वपुस्तके 'एतत्प्रदर्शनेन शक्तिग्रहकाले दृष्टव्यक्तिविशेष एव शक्तिग्रहो न तु व्यक्त्यन्तरे, तथाच तत्तद्व्यक्तिषु तदीयमर्शो च व्यभिचार इति दर्शयितुमेवाचार्य प्रवृत्त' इत्यशो दृश्यमानोऽपि 'मीमांसकानामपि तद्व्याप्तेर्व्यभिचार दर्शयितुम्' इति टीकाभागस्य व्याख्यानरूपा केनचित् कृता टिप्पणी लेखकप्रमादेन टीकायामन्तर्भावितेति बुद्ध्या परित्यक्त ।

(B) एवकार शक्तिग्रहानन्तरमित्यनन्तरं योजनीय ।

---

1 'अखण्डवाक्यवाक्यार्थयोरावापोद्वापेन शक्तिग्रह इति व्याचष्टे' ख।

(A)परतः 'चैत्र गामानय देवदत्त अश्वमानय देवदत्त गां नय' इत्यादिवाक्यप्रयोगे तस्य तस्य शब्दस्य तं तमर्थमवधारयन्तीति अन्वयव्यतिरेकाभ्यां प्रवृत्तिनिवृत्तिकारि वाक्यमेव प्रयोगयोग्यमिति वाक्यस्थितानामेव पदानामन्वितैः पदार्थैरन्वितानामेव सङ्केतो गृह्यते(B) इति विशिष्टा एव पदार्था वाक्यार्थः, न तु पदार्थानां वैशिष्ट्यम्।

यद्यपि वाक्यान्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानि निश्चीयन्ते इति पदार्थान्तरमात्रेणान्वितः पदार्थः

परत इति, (C)अथ तत्तत्पदपरिवृत्तिरूप आवापोद्वाप। 'अन्वितै' परस्पराऽन्वितैः। 'अन्वितानां' [1]ताद्रूप्यं सम्बद्धानाम्[1]*, आसत्तिमतां वा पदानाम्। 'वाक्यार्थ' वाक्यप्रतिपाद्य। 'न तु' इत्यनेन नैयायिकमतनिषेध। इत्थ मीमांसकमत दर्शयित्वा तत्रैव (D)अनुपपत्तिद्वयमुद्भाव्य तत्रैकानुपपत्ते शक्यपरिहारत्वेऽपि '[2]अन्यानुपपत्तिरशक्यपरीहारेत्याह—यद्यपीत्यादिना गोचर इत्यन्तेन। '[3]गृहीतशक्तिपदान् वाक्यादभिन्नमेव (E)तादृशवाक्यान्तरमित्यत्र प्रथमानुपपत्युद्धार। निश्चीयन्ते इत्यनन्तर (अत) वाक्यभेदनिबन्धनो न दोष इति पूरणीयम्। द्वितीयानुपपत्तिमुद्भावयति—पदार्थान्तरमात्रेणेति शक्तिग्रहकालदृष्टगवादिनैरपेक्ष्येण्यर्थ, तथाच '[4]गवान्तरा-

(A) परत इत्यादिसन्दर्भस्यास्यार्थं प्रदीपे स्फुटतररूपेण प्रतिपादित', तत्सर्वमत्र विस्तृतिभयात् नोद्ध्रियते।

(B) गृह्यत इति। एतादृशानां पदानां गोकर्मकानयनादिरूपेणार्थेन सह सङ्केतरूप सम्बन्धो गृह्यते इति निर्गलितार्थ।

(C) अथमिति, चैत्र गामानयेत्यादिवाक्यसमुदाय आवापोद्वापप्रदर्शनमन्यलमित्यर्थ। आवाप अन्वय। उद्वाप व्यतिरेक।

(D) अत्र शक्तिग्रहकालीनवाक्यघटकगवादिव्यक्तितुल्याद् वाक्यान्तरघटकगवादिशब्दार्थोपस्थित्यनुपपत्ति प्रथमा, गृहीतशक्तिकगवादिव्यक्तिभिन्नगवाद्युपस्थित्यनुपपत्तिर्द्वितीयेति अनुपपत्तिद्वय बोध्यम्।

(E) वाक्यान्तरमिति स्थलविशेषाभिप्रायेण, पदानीति मूलोक्तमेव यथाश्रुतं सम्यक्, वाक्यभेदेऽपि पदाभेदस्वीकारेणैव तद्दोषोद्धारस्यावश्यकत्वात्।

1 'तादृशार्थं सम्बद्धानां' ख, 'तादृशार्थ सम्बद्धानाम्' ग। 2 'द्वितीयानुप' ग घ। 3 'गृहीत शक्तिकपदकान्' ग। 4 'गवान्तरोपस्थानयत्नानुपपत्तिरिति' क।

सङ्केतगोचरः, तथाऽपि सामान्यावच्छादितो विशेषरूप एवासो प्रतिपद्यते व्यतिपक्तानां पदार्थानां तथाभूतत्वाद् इत्यन्विताभिधानवादिनः, तेषामपि मते [1]सामान्यविशेषः पदार्थः सङ्केतविषय इत्यतिविशेषभूतो [2]वाक्यान्तर्गतोऽसङ्केतितत्वादवाच्य एव(A)। (B)यत्र पदार्थः प्रतिपद्यते तत्र दूरेऽर्थान्तरभूतस्य निःशेषच्युतेत्यादौ विध्यादेश्चर्चा।

---

न्वयबाधानुपपत्तिरिति दर्शितम्। समाधत्ते—तथाऽपीति। विशेषव्यक्तावपि सामान्येन रूपेण शक्तिग्रह। तथाच सामान्यव्यतिषक्तव्यक्त्यन्तराणामन्वयबाध इत्याह—सामान्यावच्छादित इति। असाविति शक्तिग्रहकालेऽपलब्धव्यक्तिरित्यर्थ। 'व्यतिषक्तानां' सामान्यावच्छिन्नशक्त्यन्तराणाम्। 'तथाभूतत्वात्' शाब्दबोधविषयत्वात्। अत्र अशेष इति साध्य पूरणीयम्। इत्थं मीमांसकमतं दर्शयित्वा तन्मतेऽपि व्याप्तेर्व्यभिचारं दर्शयति—तेषामपीति। सामान्यविशेष' [3](C)शक्तिग्रहकालदृष्टगवादिव्यक्तिरूप। 'अतिविशेष' द्वितीयावगता गवादि। अविशेष इति क्वचित् सम्यगेव पाठ। वाक्यान्तर्गत इति वाक्यान्तरान्तर्गत इत्यर्थ। वाक्यार्थान्तर्गता वाक्यार्थान्तरान्तर्गता वाक्यान्तरगत इति तु (धा१) क्वचित् सम्यगेव पाठ। 'यत्र' मते 'अर्थान्तरभूतस्य' प्रथमप्रतिपन्नव्यक्तिता भिन्नस्य, 'विध्यादे'

---

(A) अवाच्य एवेति। तथाच उक्तनियमस्य व्यभिचार इति भाव।

(B) ननु उक्तनियम साजात्यघटितो वाच्य, तथाच वाक्यान्तरप्रतिपाद्य कालान्तरवर्तिशाब्दबोधान्तरविषयो गवादि सङ्केतग्रहाविषयोऽपि सङ्केतग्रहविषयगवादिसजातीय एव, अतो न व्यभिचार इत्यत आह—यत्रेति। अत्र पदार्थ इति सावधारणम्, अर्थान्तरभूतस्य वाच्यार्थाद्विपरीतस्येत्यर्थ, तथाच सङ्केतग्रहविषयस्य गवादेस्तत्सजातीयतया च गवादिव्यक्त्यन्तरस्य शाब्दबोधविषयतया व्यभिचारासम्भवेऽपि निःशेषच्युतादौ व्यङ्ग्य तदन्तिकगमने वाच्यस्य तदन्तिकगमननिषेधस्य साजात्याभावेन व्यभिचारो दुर्वार इति भाव।

(C) शक्तिग्रहेति, अत्र सामान्यत्व गोत्वादिना, विशेषत्व च तत्कालदृष्टत्वादिनेत्यभिप्रायो बोध्य।

---

1 'सामान्यविशेषरूप' इति मुद्रितपुस्तकेषु पाठ। 2 वाक्यार्थान्तरगत इति मुद्रितपुस्तके पाठ।

3 'प्रथमदृष्ट'०ख।

(A)अनन्वितोऽर्थोऽभिहितान्वये, पदार्थान्तरमात्रेणान्वितस्त्वन्विताभिधाने, अन्वितविशेषस्त्ववाच्य एव इत्युभयनयेऽप्यपदार्थ एव वाक्यार्थः।

यदप्युच्यते 'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते'

---

निषेधप्रतियोगिनस्तद्वृत्तिकपमनपेक्ष्यादि। उभयमतेऽपि (B)[1]द्वितीयप्रतिपन्नव्यक्तिसंसर्ग एव[1]॰ व्यभिचारं दर्शयति—अनन्वित इति।

बोधकत्वेन शब्दो निमित्तम्, नैमित्तिकन्तु ज्ञानम्, तद्विषयतया अर्थोऽपि नैमित्तिकः। ईदृशनिमित्तनैमित्तिकभावादेव निमित्तस्य शब्दस्य नैमित्तिकव्यङ्ग्यार्थवाचकत्वसिद्धिरिति भट्टलुटादीनां मतमाह—यदपीति। 'निमित्तानि' शब्दा इत्यर्थः।

---

(A) उपसंहरति—अनन्वित इत्यादि। अभिहितान्वयवादिमते अनन्वितो गवादि 'अर्थ' पदादिप्रतिपाद्य, अन्विताभिधानवादिमते पदार्थान्तरमात्रेण क्रियात्वादिसामान्यरूपेण उपस्थितेनानयनादिभि अन्वितः सम्बन्धत्वादिना सामान्यरूपेण उपस्थितकर्मत्वादिविशिष्टगवादि, अर्थ इति लक्ष्यते। अन्वितविशेषस्त्विति, अन्वित सम्बन्धयुक्त, एतदभिप्रायेण अभिहितान्वयमतेऽवाच्यत्वम्, विशेष तत्तद्गवादिरूप, एतदभिप्रायेण अन्विताभिधानमतेऽवाच्यत्वम्, सामान्यरूपेण सङ्केतग्रहस्य तत्सिद्धान्तत्वात्। अन्वयविशेषसहितव्यक्तिविशेष इत्यर्थकत्वे तु तद्विशेषानुसरणापेक्षाऽपि नास्तीति बोध्यम्, अवाच्य सङ्केतग्रहाविषय इत्यर्थः। तथाच कर्मत्वाद्यभिहित सङ्केतग्रहकालादृष्टो गवादि उभयमते नाभिधाया विषय इति हेतो॰ वाक्यार्थ॰ वाक्यप्रतिपाद्योऽन्वितगवादि अपदार्थ पदाप्रतिपाद्य एवेति लक्षणाऽप्रयोज्या शाब्दबोधविषयता अभिधाप्रयोज्यैवेति नियमे व्यभिचार स्फुट इति भाव।

(B) द्वितीयेति, शक्तिग्रहात् परं आसत्तिसहकारिकालवर्तिशाब्दबोधविषयीभूतगवादिव्यक्त्यन्तरे तत्संसर्गे चेत्यर्थः। तथाच तादृशबोधे शक्तिजन्यत्वरूपं साध्यं नास्ति लक्षणाऽजन्यशाब्दबोधत्वरूपोहेतुस्तु वर्तत इति व्यभिचार इति भाव। रसादिविषय अभिधाप्रयोज्यविषयताश्रय लक्षणाऽप्रयोज्यशाब्दबोधीयविषयतावत्त्वादिति प्रयोगे तु गवादिव्यक्त्यन्तरे तत्संसर्गे वा अभिधाप्रयोज्यविषयताख्यं साध्यं नास्ति हेतुस्तु वर्तत इति यथाश्रुतमेव सम्यगिति बोध्यम्।

---

1. 'द्वितीयप्रतिपन्नव्यक्तीनां संसर्गे' ख, 'द्वितीयव्यक्तिसंसर्ग एव' ग।

स चान्वितमात्रे, एवं च 'निमित्तस्य नियतनिमित्तत्वं'[1] यावन्न निश्चितं तावन्नैमित्तिकस्य प्रतीतिरेव कथमिति 'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते' इत्यविचारिताभिधानम् (A)।

ये त्वभिदधति सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः

---

'कार्यादिने'वेत्यर्थः। स चेति 'स' (B)सङ्केतग्राहकः। 'अन्वितमात्रे', प्रथमप्रतीतान्वितमात्रे, न तु द्वितीयप्रतीते तदन्वितकमेव स्तुमित्याद्रिके। एवञ्चेति। नियतनिमित्तत्वम्, शक्तिरूपसम्बन्धेन नियतार्थं प्रति यथोक्तनिमित्तत्वमित्यर्थः।

व्यङ्ग्यार्थेऽप्यभिधेयार्थबोधिकामभिधामेव व्यापारं दृष्टान्तेन साधयतां मतमाह—ये त्विति। अत्र मते एकलक्ष्यभेदनार्थं प्रतिसंहितेषुवेगो यथा तल्लक्ष्यं भित्वा लक्ष्यान्तरभेदनार्थमप्रतिसंहितोऽपि सन् दीर्घतरीभूय लक्ष्यान्तरमपि भिनत्ति तथा एकैव अभिधा जाता सती वाच्यार्थं बोधयित्वा व्यङ्ग्यार्थं प्रति क्रमादीर्घ दीर्घतरीभूता तमर्थं बोधयन्त्यतो न शक्तिग्राहककोशाद्यपेक्षेत्यतो न पूर्वोक्तदोषावकाश इति 'सोऽयमिषोरिव दीर्घदीर्घतरो व्यापार' इत्यस्यार्थः।

---

रसादिप्रतीतौ तत्कल्पना तु नानुमन्यते, तत्र अभिधाव्यञ्जनयोर्वैलक्षण्यमलङ्कारादावपव्यस्य [illegible]पञ्चदर्शेन कार्यवैलक्षण्येन विलक्षणकारणत्वस्य व्यञ्जनाया स्वीकारसम्भवादिति युक्तमुत्पश्याम।

(A) एतत्सम्बन्धे निर्गलितोऽर्थो विवरणकारैरुक्तः—'अस्मत्सिद्धान्तानुसारं व्यङ्ग्योपस्थितौ शब्दस्य ज्ञापकत्वरूपं निमित्तत्वमस्माकमपि सम्मतम्। तत्र नास्माकं विवादः। परं [illegible] व्यञ्जनाया अस्वीकारे तन्न सम्भवति; शब्दस्यार्थनिमित्तत्वं हि व्यापारसापेक्षमेव नियतम्; यथा वाच्यार्थलक्ष्यार्थयोरभिधालक्षणे व्यापारौ, तथा इहापि कोऽपि व्यापारोऽवश्यमङ्गीकार्यः, अन्यथा हि शब्दस्य निमित्तत्वानिश्चयेन नैमित्तिको व्यङ्ग्यार्थ इत्येव भवदभिमतोऽपि न सिध्यति, यदि तु व्यापारं विनाऽपि शब्दस्य निमित्तत्वं स्यात्, तदा अभिधालक्षणे अपि व्यर्थलाङ्गूली स्यातामित्यस्माभिरुच्यते, इत्यभिप्रायमबुद्ध्वाऽभिधानमविचारितरम्यमेव' इति।

(B) अज्ञातस्य अर्थात् अश्रुतस्य श्रुतस्यापि योऽयं गौरिति शक्तिमित्यादिरूपेण तत्तदर्थशक्तिमत्तया अज्ञातस्य गवादिशब्दस्य साधारणमदृष्टादिवज्ज्ञापकत्वम् अतिप्रसङ्गान्न सम्भवति, अत तत्तदर्थशक्तिमत्तया ज्ञातस्यैव शब्दस्य ज्ञापकत्वं वाच्यम्, शब्दस्य शक्तिमत्त्वज्ञानन्तु न

---

1. 'निमित्तस्य नियतत्वं' इति क्वचित् पुस्तके पाठः। 2 'दीर्घदीर्घतरोऽभिधाव्यापारः' इति साहित्यदर्पणे विशेषः। 3 'कोषादिव्यापारैर्वा' क, 'कोषकारादिव्यापारैर्वा' ख।

इति 'यत्परः शब्दः स शब्दार्थः' इति च विधिरेवात्र वाच्य (A)इति,

---

ननु व्यङ्ग्यस्य तादृगभिधावाच्यत्वे किं प्रमाणमित्यत आह यत्पर इति। 'यत्परः' यत्तात्पर्यकः शब्दः, स तच्छब्दस्य वाच्यार्थ एव इत्येतदर्थकम् इदमभियुक्तवाक्यमेव प्रमाणमित्यर्थः। निःशेष इत्यादौ तदन्तिकगमनविधौ तात्पर्यात् स एवार्थो वाच्य

---

प्रत्यक्षरूपं शक्तेरतीन्द्रियत्वादत्र सङ्केतस्य तत्र हेतुत्वं नास्तीत्यत्र सङ्केतस्यैवेति मूलोक्तं तद्ग्राहकपरतया व्याचष्टे—सङ्केतग्राहक इति, व्यवहार इति स्पष्टबलप्रत्ययम्। तदुक्तम्—"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥" इति।

(A) भट्टमतोपजीविनां भट्टलोल्लटादीनामभिमतोऽयं पक्षः। तेषामभिप्रायः प्रदीपे स्फुटः। *तथा हि—अत्र सोऽयमिषोरिव दीर्घदीर्घतरो व्यापार इति यत्परः शब्दः स शब्दार्थ* इति च 'निःशेष' इत्यादौ विधिरेव वाच्य, इति भट्टमतोपजीविनः। अस्यार्थः—यथा बलवता प्रेरित इषुरेकेनैव वेगाख्येन व्यापारेण वर्मच्छेदम् उरोभेदं प्राणहरणं च रिपोर्विधत्ते, तथैक एव शब्द एकेनैवाभिधाख्यव्यापारेण पदार्थस्मृतिं वाक्यार्थानुभवं व्यङ्ग्यप्रतीतिं च विधत्ते। अतो व्यङ्ग्यस्याभिमतस्यार्थस्य वाच्यत्वमेव। किञ्च यत्र शब्दस्य तात्पर्यं स शब्दार्थ इति 'निःशेष' इत्यादौ तात्पर्यविषयतया विधिर्वाच्य एवेति। ते तात्पर्यवादोक्तमतात्पर्यमजानन्तः पराः। यद्वा तत्पदार्थविन्यासोपस्थापित एव हि तात्पर्यमुच्यते न प्रतीतिमात्रे। तथा हि—भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यत इति सिद्धान्तः।

अस्यार्थः—भूतं सिद्धम्। भव्यं साध्यम्। तयोः समभिव्याहारे भूतं सिद्धं भव्याय साध्यायोपदिश्यत इति। कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः सिद्धा अपि प्रधानक्रियानुकूलया सामग्रीभूतया स्वक्रियया योगात् साध्यायमानतामाप्नुवन्ति स्वरूपेण सिद्धा अपि साध्यक्रियाविशिष्टतया साध्या इव भवन्ति। ततश्च यथा दध्नेत्यादावपरत्र दध्यते न तु दधमपि तथा यावदेवाप्राप्तं तावदेव शब्देन विधीयते न तु प्राप्तमपि। यथा ऋत्विक्प्रचरणेऽन्यतः प्राप्ते 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यनेन लोहितोष्णीषत्वमात्रं विधीयते, न तु ऋत्विक्प्रचरणम्, उष्णीषस्यापि प्राप्तौ तु लौहित्यमात्रम्, एवमन्यत्रान्यतः सिद्धौ च 'दध्ना जुहोति' इत्यनेन दध्नः करणत्वं न ॥ दधि हवनं वा। एवं 'रक्तं पटं वय' इत्यादौ रक्तत्वपटवयनानां मध्ये एकस्य द्वयोस्त्रयाणां वाऽसिद्धावेकविधि-द्विविधि-त्रिविधयः। ततश्च यावदेव विधेयं तावत्येव तात्पर्यम्। विधेयं च शब्दोपात्तमेवेति सूक्तं 'शब्दोपात्त एव तात्पर्यम्' इति। यदि च प्रतीतिमात्रे तात्पर्यं तदा 'पूर्वो धावति' इत्यादौ पूर्वाभिधान-संनिहितविषयतया प्रतीतेऽपरार्थेऽपि कदाचित् तात्पर्यं स्यात्। ननु तदा स्वार्थविपर्यासोपस्थापित एव तात्पर्यमिति न व्याप्तिः। विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्थाः इत्यत्र विषं भुङ्क्ष्वेति वाक्यस्य मा चेत्यादि वाक्यार्थे तात्पर्यादिति। नैवम्। यत एतदेकमेव वाक्यम्।

तेन तात्पर्यज्ञाः (A)तात्पर्यवाचोयुक्तेर्देवानांप्रियाः। तथा हि (B)भूत-

---

एवेत्यर्थः। ते न तात्पर्यज्ञा इति समीचीन एव पाठः। अतात्पर्यज्ञा इति क्वचित् पाठे तु तदित्यव्ययं, ते इत्यर्थकम्। 'तात्पर्यवाच' यत्परः इत्यादितात्पर्यवाक्यस्य या युक्तिः विषयविभागः, तद्विषयतात्पर्यस्यानभिज्ञा इत्यर्थः। 'देवानांप्रियाः' (C)पशवः। एव्यर्थकमिदम्(D) अलुक्समस्तं पदम्। यत्परः इत्यादिवाक्यस्य 'अन्य एव विषय-विभाग इति'[1] दर्शयति—तथा हीति। (E)गामानयेति वाक्ये प्रमाणान्तरप्राप्तो यो

---

पदार्थस्तैकवाक्यतासूचकत्वात्, अन्यथा तद्वैयर्थ्यप्रसङ्गात्। न चाऽऽकाङ्क्षावाच्यक्रियो। सामान्यतः सम्भवति, 'गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात्' इति न्यायात्। अप्राप्तं चैतत्, अतो नवीनमप्यतात्पर्यमेव। अतो विषभक्षणवाक्यस्येदद्गृहभोजनमविरोधत्वात् सर्वथा मास्य गृहेऽभुङ्क्था (माऽस्य गृहे भुङ्क्था !) इति वाक्यार्थः। तथा च प्रकरणस्य यतोऽप्राप्तिर एव तात्पर्यमिति सिद्धम्। तस्मात् 'यत्परः शब्दः' इत्यादि यदुक्तं तत् तात्पर्यज्ञाभावात्।

यदपि 'सोऽयमिषोरिव' इति तदप्ययुक्तम्। यत्र अन्वयव्यतिरेकाभ्यां यावानर्थः प्रतीयते तावति सर्वत्र यदि शब्दस्याभिधैव स्यात् तदा 'पुत्रस्ते जातः' कुमारी ते गर्भिणी' इत्यादि-वाक्यानन्तरं हर्षविषादयोः प्रतीतेस्तयोरपि तद्वाक्यस्याभिधा स्यात्। अथ शब्दस्यप्रतिपाद्ये सर्वत्राभिधा, हर्षादयस्तु न शब्दस्याप्या इत्युच्यते तर्हि व्यञ्जकोऽप्यभिधैव स्यादिति व्यञ्जको-ऽक्तेः। किमिति च 'श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थ-विप्रकर्षात्' इति सूत्रेण भगवान् जैमिनिः श्रुत्यादिषु पूर्वबलीयस्त्वं प्रतिपादयामास। सर्वत्रैवा-भिधाप्रसङ्गे तयास्य दौर्बल्ये बीजाभावात्' इति।

(A) तात्पर्येति, तात्पर्यविषयिणी या वाचोयुक्तिः युक्तियुक्ता वागित्यर्थः तस्यास्तात्-पर्यानभिज्ञा इत्यर्थः। वाचोयुक्तिरित्यत्र समस्तपदे 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' इत्यनेन षष्ठ्या अलुक्।

(B) भूतभव्येति। भूतभव्ययोः सिद्धसाध्ययोः समुच्चारणे समभिव्याहारे भूतं सिद्धं वस्तु भव्याय भावप्रधाननिर्देशात् साध्यत्वाय उपदिश्यते अन्यते, साध्यपरं हि विधेयाश्रये परमिति प्राचीनैः प्रयुक्तम्, तथा च सिद्धस्यैव साध्यतां बोध्यमिति भावः।

(C) पशव इति। तथा च त्रिकाण्डशेषे "वर्करस्तु कम्बकर्मठजागो वत्स शिवाप्रियः। अल्पायुर्लम्बुकश्चापि मेनादः पशमोजकः॥ परिक्रमसहो मूर्खो देवानांप्रिय इत्यपि॥" इति तथा तत्रैव "स्याद्देवानांप्रियः छागे हलको मन्दबुद्धवत्" इति।

(D) अलुगिति, 'क्वचिदन्यत्रापि' इति अलुक्सूत्रम्। 'देवानांप्रिय इति च मूर्खे' इति वार्तिकसूत्रम्।

(E) भूतभव्येत्यादिकमुदाहरणमुखेन व्याचष्टे—गामानयेति।

---

1. 'तैयात्पर्यज्ञाः' इति मुद्रितपुस्तकेषु पाठः। 2. 'यत्परः' इत्यादौ यत्राप्य अभिधेयतात्पर्यं न तद् प्रमाणमिति' च।

तथा निःशेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि, तानि कारणान्तरतोऽपि भवन्ति, अतश्चात्रैव स्नानकार्यत्वेनोक्तानीति नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि। व्यक्तिवादिना च (A)अधमपदसहायानामेषां व्यञ्जकत्वमुक्तम्।

तथेति दूती उपनायकोपभुक्ता चन्दनच्यवनादिमत्त्वादित्यनुमाने व्यभिचार इत्यर्थः। न च चन्दनच्यवनादौ वैलक्षण्यविवक्षणात् न व्यभिचार इति वाच्यं शब्दात् तदनुपस्थितेः। नन्वीदृशात् ततः कथमुपभोगस्य व्यञ्जनाऽपीत्यत आह—व्यक्तिवादिना चेति व्यञ्जनावादिना चेत्यर्थः। अधमपदसहायानामिति दूतीत्वेनैवाधमत्वमित्यभिप्रायः। एतदपि दूतीप्रेषणकृतस्वकृतनायकाभिप्रायेणैवोक्तम्, तदन्यनायकपक्षे तु दूतीप्रेषणमपेक्षत्वेनाप्यधमत्वसम्भवात् न तत्सहायत्वबाधकम्।

---

भावेन तादृशबोधे अप्रामाण्यशङ्का औत्सर्गिकी। तथाच ज्ञानधर्मिकाप्रामाण्यसन्देहस्य विषयसंशयपर्यवसानवद् वचने आप्तोक्तत्वानिश्चयेन प्रतिपाद्यधर्मिकस्य सिद्धवत्तया ज्ञानमप्रामाण्यशङ्काकलङ्कितमिति मद्वृत्तान्तस्थानरूपः पक्षः अप्रामाण्यज्ञानानास्कन्दितहेतुनिश्चय एव नास्तीति कथं तस्य एतत् स्थानं मम भ्रमणानर्हमित्यनुमिते सम्भव इति। अर्थनाप्रतिबन्धात् अर्थेन सह व्याप्यव्यापकभावरूपसम्बन्धविरहादित्यर्थः। एतेन प्रवृत्त्यौपयिकशाब्दबोधे वाक्यस्य आप्तोक्तत्वनिश्चयोऽपेक्षित इति सूचितम्।

अथ तथाऽपि अप्रामाण्यसन्देहकारणस्य तत्रानुपस्थितेरस्ति तस्य अप्रामाण्यज्ञानानास्कन्दितहेतुज्ञानम्, ततश्चानुमितिर्निष्प्रत्यूहेति चेत्, एतदभ्यासेनैव निःशेषस्यादौ हेतोर्व्यभिचारप्रदर्शनमिति सुधीभिर्विभावनीयम्।

(A) अधमेति। अत्र दूतीप्रेषणसापेक्षतया यादृशमधमत्वं तदपेक्षया पूर्वकृतापराधमधमत्वस्य गरीयस्त्वं परिस्फुटमिति उभयसाधारणार्थप्रतिपादकं निःशेषच्युतेत्यादिपद्यापेक्षया अधमपदस्य प्राधान्येन सहायत्वमिति बोध्यम्। इदानीन्तनदूतीत्वेन प्राधान्यं तु प्रत्युक्तमधस्तात् (२९ पृष्ठे)।

न चात्र अधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमानम्? एवंविधादर्थादेवंविधोऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशत इति व्यक्तिवादिनः पुनस्तद् अदूषणम्।

इति काव्यप्रकाशे ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेदनिर्णयो नाम पञ्चम उल्लास ॥५॥

---

नन्वेव मयाऽपि अधमसन्निहितप्रेषितत्वे सतीति हेतुविशेषणं देयमित्यत आह—न चेति, अत्रोष्यनिन्द्रियाऽध्यधमोक्तिसम्भवादिति भाव। ननु तथापि कथमेवं-विधादर्थादुपभोगप्रजनेत्यत आह—**एवंविधादिति**। 'उपपत्ति' अव्यभिचारादि। '**तददूषणमिति**, व्यञ्जनया प्रतिपादने अव्यभिचारादेरनपेक्षणादिति भाव'*।

इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्यकृते काव्यप्रकाशादर्शे गुणीभूतव्यङ्ग्यनिर्णयस्य पञ्चम प्रतिबिम्ब।

